Calcutta Oriental Series

No. 6. 0. BT. I

# CĀNAKYA-KATHĀ

BY

RAVINARTAKA

WITH A BENGALI TRANSLATION

BY

SATISH CHURN LAW

Calcutta Oriental Series No 6. O. BT. 1

# CĀṆAKYA-KATHĀ

BY

RAVINARTAKA

WITH A BENGALI TRANSLATION

BY

SATISH CHURN LAW

With a Prefatory Note

BY

DR. NARENDRA NATH LAW, M.A., B.L., PH.D.
*Premchand Roychand Scholar.*

SECOND EDITION

CALCUTTA

## PREFATORY NOTE

This work edited and published for the first time from manuscript was procured about a year ago from the Library of the Raja of Cochin. It gives in a versified form a story which is materially similar to the plot of the famous Sanskrit drama *Mudrārākṣasa* by Viśākhadatta. It is based upon a prose original referred to in the third couplet of the work: *Cāṇakyasyā kathā seyaṃ vidyate gadyarūpiṇī. Atha tāṃ padyatān netum udyato Ravinartakaḥ* (This *kathā* of Cāṇakya exists in prose. Ravinartaka is now attempting to render it into verses). Professor H. H. Wilson mentions, in his preface to the *Mudrārākṣasa* in the *Theatre of the Hindus*, vol. II, p. 141, a Sanskrit manuscript in the collection of Col. Mackenzie in Telinga character which purported to be an Introduction to the said drama to make its plot more lucid. This was written by Dhundhi, son of Lakṣmaṇa. I could not find out the name and details about this manuscript in Prof. Wilson's *Mackenzie Collection* (second edition), which leaves me in doubt as to whether this work was in prose or verse, and no inference can therefore be drawn as to whether it was the same as, or similar to, this *Cāṇakya-Kathā* or its prose original. The summary of its contents as given by Prof. Wilson in the said preface resembles the story of the *Cāṇakya-Kathā.* In both we find mention of two wives of the monarch Nanda (Sarvārthasiddhi) one of whom was of Śūdra extraction and named Murā, while the other was called Sunandā.

The former gave birth to one son called Maurya to whom was born a hundred sons of whom Candragupta was the youngest, the latter being delivered of nine sons called the Nine Nandas. Thus, Candragupta, in both the accounts, is a grandson of Murā and not her son.

The sending of a waxen lion in a cage to the court of Nandas by another king (the manuscript text has Vaṅka which may be a wrong transcript for Laṅkā though it has been rendered into Vaṅga in the translation), the attempt to kill Maurya with his hundred sons by starving them in an underground hollow, the death of all of them at the place except Candragupta who was brought out to solve the problem propounded to the king in connection with the sending of the lion in the cage, appear common to both the *Cāṇakya-Kathā* and the manuscript. I need not relate the later incidents of the story as they are essentially similar to those of the drama.

The most noteworthy points in the *Cāṇakya-Kathā* for historical purposes are (1) the description of Candragupta as a grandson of Murā, and (2) the reference to the use of *śalākā* by which the order of the nine Nandas for carrying on the administration, each one year by turn, was determined. It is well-known that the intervention of nine Nandas in the chronology of Nanda dynasty presents a good deal of difficulty, if they be taken to have been lineal descendants and to have succeeded to the throne one after another. It is remarked by Mr. V. Smith in his 'Early History of India' (3rd edition), p. 42 that the "period of fifty years has been assumed as being credible and

fitting into the chronological scheme which does not give room for a dynasty lasting a century." If the nine Nandas be taken to have come to the throne annually by turn, the period advocated above is not exceeded. The interpretation of 'Nava Nanda' as 'Neo-Nandas', as done by Mr. K. P. Jayaswal in the *Journal of the Behar & Orissa Research Society*, vol. I, part I, p. 87, need not be resorted to, if the accounts of the *Cāṇakya-Kathā* be taken to be of a superior force.

It is the opinion of some scholars that the plot of the *Mudrārākṣasa* is based on accurate information and ancient court tradition. It would have been a valuable accession to our knowledge if it could have been known for certain that the prose original of the *Cāṇakya-Kathā* was a repository of such information and tradition. Though the manuscript of the Mackenzie collection was written by a paṇḍit with the express object of relating details for making the *Mudrārākṣasa* easily intelligible, it is not known whether the *Cāṇakya-Kathā* and for the matter of that, its prose original, were also meant to be but commentaries on the plot of the drama. If they be such, the production of the two, later than the *Mudrārākṣasa* like the said manuscript is certain. But such an assertion is not found in the *Cāṇakya-Kathā* which leaves it probable that its prose original was a repository of information of the kind referred to above, which the drama used for its materials.

96, Amherst Street,<br>*Calcutta, 1921.* NARENDRA NATH LAW

## PUBLISHER'S NOTE

In view of the historical and literary importance of the work, it has been thought necessary to issue a second edition of the work. In the present edition, the typographical blemishes, that had crept into the first edition, have been removed, and the Bengali translation has been revised.

APRIL, 1930,<br>*Calcutta.*

रविनर्तक-विरचिता

# चाणक्यकथा

स्वभावमहितैर्वेषैः पुष्णन् विबुधसम्मदम् ।
ख्यापितो गोभिरग्र्याभिः श्रीमन्नारायणो जयेत् ॥ १ ॥
बुद्धिरेव जयत्येका पुंसः सर्वार्थसाधनी ।
यद्बलादेव किं किं न चक्रे चाणक्यभूसुरः ॥ २ ॥
चाणक्यस्य कथा सेयं विद्यते गद्यरूपिणी ।
अथ तां पद्यतां नेतुमुद्यतो रविनर्तकः ॥ ३ ॥
नयप्रयोगप्राचण्ड्यस्फुरद्वीराद्भुतात्मना ।
अनया कथया को न मतिमानतिमाद्यति ॥ ४ ॥
अस्ति सुस्थितभूपालवृन्दं मन्दाकिनीतटे ।
रत्नांशुपाटलीभूतं पाटलीपुत्रकं पुरम् ॥ ५ ॥
बहुजातिसमाकीर्णमशोकोदयशोभनम् ।
भूमौ तिलकभूतं यदाहुः पुष्पपुरं जनाः ॥ ६ ॥
सर्वार्थसिद्धिस्तत्रासीद्राजा नन्दापराभिधः ।
अमात्यश्चाभवत्तस्य राक्षसो नाम रूक्षधीः ॥ ७ ॥
योऽलङ्कोपनिवासश्च रामादिषु निरादरः ।
नयज्ञेषु प्रसन्नात्मा सत्यं राक्षस एव सः ॥ ८ ॥

सोऽथ राजा सुनन्दाख्यामविन्दन्नृपनन्दनाम् ।
मुराख्यां शूद्रपुत्रीञ्च स्मरास्त्रस्येव देवताम् ॥ ९ ॥
सुन्दरीभ्याश्चिरं ताभ्यां नन्दितो नन्दपतिः ।
नन्दनानुदयात् सोऽयमन्तश्चिन्तामधात् क्रमात् ॥ १० ॥
तावदस्य पुरं प्राप कोऽपि तापसपुङ्गवः ।
अर्घ्य-पाद्यादिभिश्चैनं मानयामास भूमिपः ॥ ११ ॥
तत्पाद्यं प्रिययोर्मूर्ध्नि नृपश्चिक्षेप पावनम् ।
तत्र चैकं पयोविन्दुं मुरा प्राप परा नव ॥ १२ ॥
विन्दुञ्च तमतिप्रीत्या भक्त्या प्रत्यग्रहीन्मुरा ।
सनिन्दमिव तान् दध्रे सुनन्दा त्वतिमानिनी ॥ १३ ॥
बुद्ध्वा तयोस्तदाकारं सोऽतिप्रीतो मुरां प्रति ।
लब्धकार्यश्च भूपालान्निर्गतोऽभूत्तपोधनः ॥ १४ ॥
ततोऽचिरेण कालेन धन्या गर्भमधान्मुरा ।
सुषुवे च महावीर्यं मौर्याख्यं महिमालयम् ॥ १५ ॥
प्राप्तकालञ्च तं राजा तनयं विनयान्वितम् ।
ग्राहयामास शस्त्रास्त्रं शास्त्रादीनि त्रयीं विना ॥ १६ ॥
तस्मिंस्तृप्तोऽभवद्राजा सोऽपि तस्य मते स्थितः ।
मात्रोश्च हृदयानन्दं चक्रे जनपदस्य च ॥ १७ ॥
ततो देवी सुनन्दापि गर्भं दधे चिरेप्सितम् ।
नृपोऽपि गर्भसंस्कारान् क्रमेण व्यतनोन्मुदा ॥ १८ ॥
ततः सा दशमे मासि मांसपिण्डमजीजनत् ।
तं दृष्ट्वा खेदमापेदे सामात्यान्तःपुरो नृपः ॥ १९ ॥
अथान्तरिक्षे राजानं वागुवाचाऽशरीरिणी ।
राजन्नलं विषादेन सम्पन्ना नव ते सुताः ॥ २० ॥

इत्याकर्ण्यापि भूपाले शोकव्याकुलिते स्थिते ।
विचिन्त्य राक्षसो धीमान् गान्धारीवृत्तमस्मरत् ॥ २१ ॥
स पिण्डं नवधा कृत्वा मांसपिण्डानमून् पुनः ।
तैलाधारेषु निक्षिप्य ररक्ष किल राक्षसः ॥ २२ ॥
ततः कालेन युगपत् कुमारा नव जज्ञिरे ।
राजा च मुदितश्चक्रे जातकर्मादिकाः क्रियाः ॥ २३ ॥
प्राप्तविद्यान् धनुर्वेदपारगान् पूर्णयौवनान् ।
पुत्रानाहूय भूपालो मन्त्रयामास मन्त्रिभिः ॥ २४ ॥
नवस्वेषु न पुत्रेषु ज्येष्ठं पश्यामि कञ्चन ।
यस्मिन् भारमिमं न्यस्य विश्रान्तः सुखमाप्नुयाम् ॥ २५ ॥
तद्ब्रूत यूयं कर्तव्यं युष्मद्दृष्टिरहं किल ।
मौर्यञ्च सेनापतित्वे कल्पयामीति निश्चितम् ॥ २६ ॥
तच्छ्रुत्वाऽचिन्तयन् मौर्यो ज्येष्ठं पुत्रं कथं नु माम् ।
दास्ये सेनापतिव्याजे क्षिपत्यस्नेहवानिव ॥ २७ ॥
राज्यैकदेशमात्रं वा प्रदातुं नैष मन्यते ।
न्यूनमेतत् सुतैर्वापि मन्त्रिभिर्वा प्रयोजितम् ॥ २८ ॥
अतः परस्परं क्षोभममीषां जनयाम्यहम् ।
इति निश्चित्य भूपालमाबभाषे मुरासुतः ॥ २९ ॥
स्वच्छन्दतः कमप्येषु कृत्वा राजानमादरात् ।
करोतु स भवानन्यानष्टौ तदुपजीविनः ॥ ३० ॥
नैतत् साध्विति राजोक्ते नक्रनाशोऽब्रवीदिदम् ।
नन्दराज्यं सहस्यश्च नवधा क्रियतामिति ॥ ३१ ॥
ततः पुरमिदं कस्येत्युक्तवाक्ये सुरात्मजे ।
चिन्तयामास मर्मज्ञो मनसा राक्षसस्स्वयम् ॥ ३२ ॥

अयं हि वृषलीपुत्त्रः सापत्नं सम्प्रदर्शयन् ।
राजपुत्राभिमानो वै भेदं जनयति स्वयम् ॥ ३३ ॥
मयि जीवति न त्वस्य धार्ष्ट्यमत्र प्रगल्भते ।
इति निश्चितधीः प्राह हे कुमारा ! वदामि वः ॥ ३४
पुरः पुष्पपुरप्रख्या विधास्यन्ते नृपाज्ञया ।
कोशहस्त्यादिकञ्चैव नवधा प्रविधास्यते ॥ ३५ ॥
करिष्यते व्यवस्थापि 'शलाका'ख्यपरीक्षया ।
तद्वशादागतो भागो युष्माभिश्चानुभुज्यताम् ॥ ३६ ॥
इत्येवं राक्षसेनोक्ते मौर्यः सस्मितमूचिवान् ।
ननु पुष्पपुरस्यास्य पुष्पवाटोऽपि नाकजित् ॥ ३७ ॥
तद्वत् किल पुराण्यष्टौ करिष्यन्ते वताद्भुतम् ।
इति मौर्योदितं श्रुत्वा कुमाराः प्रोचुरुन्मदाः ॥ ३८ ॥
किमत्र भूरिजल्पितैरियं पुरी ममैव चेत् ।
वहाम्यहं महीभारं न चेद्गतोऽस्मि काननम् ॥ ३९ ॥
समस्तं वस्तु सर्वेषां कृत्वा साधारणं नृपः ।
सर्व एवाभिषिच्यन्तामिति मौर्योऽवदत्तदा ॥ ४० ॥
राजाह शक्यते नैवमन्योन्यापेक्षया यतः ।
नैकोऽपि राज्यसज्जः स्यात्तेनेदं न च रोचते ॥ ४१ ॥
अनुवत्सरमेकैकं कल्पयामि महीपतिम् ।
अन्यथा कलहायेरन् कुमारा भोगलोलुपाः ॥ ४२ ॥
ततस्तद्राजवचनं मानयत्सु च मन्त्रिषु ।
कस्तर्हि प्रथमे वर्षे राजेत्याह सुरासुतः ॥ ४३ ॥
तच्छ्रुत्वा मोहिताः प्राहुरेकवाक्यं कुमारकाः ।
अहमेवाग्रतो राजा नोचेद् यास्यामि काननम् ॥ ४४ ॥

इति श्रुत्वाचचक्षे स राक्षसः सान्त्वयन्निमान् ।
द्विषतामवकाशाय निर्बन्धो भवतामयम् ॥ ४५ ॥
युष्माभिर्माननीयोऽयं देवादेशो मनस्विभिः ।
पौर्वापर्येऽपि वर्षाणां नियमोऽस्तु शलाकया ॥ ४६ ॥
अथ तुष्टो महीपालो नन्दनामाङ्कितानिमान् ।
अभिषिच्य महोचक्रं चक्रे स नवनायकम् ॥ ४७ ॥
सैनापत्ये मुरापत्यं कृत्वा भेदभयादयम् ।
न्ययुङ्क्त राक्षसादींश्च मन्त्रिणो मन्त्र-निश्चये ॥ ४८ ॥
अवतार्य भुवो भारमात्मजेषु प्रशान्तधीः ।
वनं प्रस्थातुकामोऽपि स पौरैरर्थितोऽवसत् ॥ ४९ ॥
अथ नन्दतनुजनन्दिता सा पृथिवी गोपवधूरिवाबभासे ।
अपि च प्रतिवर्षमेकैकः पतिरिति द्रुपदात्मजेव रेजे ॥ ५० ॥
नवभर्तृषु भक्तिरत्युदारा सुदृशामित्यपि सत्यमेव जातम् ।
यदियं प्रननन्द नन्दभूमिर्नवभूपालसमागता तदानीम् ॥५१॥
तदिदं राक्षसादीनां मन्त्रिणां मतिवैभवम् ।
बहुनायकमप्येतद्राज्यं न ज्यानिमाप यत् ॥ ५२ ॥
सेनापतेस्तु मौर्यस्य कालेन कियता शतम् ।
पुत्रा बभूवुस्ते शूराः कृतास्त्राश्चाभवन् क्रमात् ॥ ५३ ॥
कनीयानपि सर्वेषां चन्द्रगुप्ताभिधः सुतः ।
भागधेयगुणोत्कर्षैरेषु ज्यायानिवाभवत् ॥ ५४ ॥
तैर्जनानन्दजननैर्निजबुद्ध्यनुसारिभिः ।
रञ्जयामास भूचक्रं तनयैः स नयैरिव ॥ ५५ ॥
वर्षमात्रावसायित्वादाधिपत्यस्य भूभृताम् ।
सैनापत्यस्य नित्यत्वाद् राजपुत्रत्वगौरवात् ॥ ५६ ॥

तनयानाञ्च सौशील्यात् कौशलादपि नीतिषु ।
राज्यं मौर्यवशप्रायमासीद् गुणवतां हि भूः ॥ ५७ ॥
तदेतद्राक्षसाद्याश्च राजानश्च न सेहिरे ।
गूढञ्च मन्त्रयामासुर्गाढमत्सर-मोहिताः ॥ ५८ ॥
हा कष्टं क्रमशोऽस्माभिर्भुज्यमानापि मेदिनी ।
वारनारीव जारस्य मौर्यस्यैव वशङ्गता ॥ ५९ ॥
स्थिता राजतया केचिदन्ये मन्त्रितया स्थिताः ।
भृत्यस्यैव करे भूमिरिति लज्जाकरं महत् ॥ ६० ॥
आदितो दर्शितद्वेषः सपत्नः कुलवृद्धिमान् ।
सद्यश्चेन्नैष नष्टः स्यादद्य श्वो वा हता वयम् ॥ ६१ ॥
रत्नराज्यैरमीभिश्च प्रत्यक्षञ्चेद्विगृह्यते ।
एकपक्षेऽवशिष्येरन् नृपा द्विताश्च मन्त्रिणः ॥ ६२ ॥
तस्माद् गूढवधः कार्यो मौर्याणामिति निश्चिताः ।
राक्षसप्रमुखाश्चक्रुर्मन्त्रमण्डपिकां पुरे ॥ ६३ ॥
सुरुङ्गाऽदीर्घमार्गेण दुष्प्रवेशा हि सा बहिः ।
अन्तरत्यन्तविस्तीर्णा मन्त्रिणामिव शेमुषी ॥ ६४ ॥
तां प्रविश्य महीपालाः सचिवाश्च दिने दिने ।
सपुत्रेण च मौर्येण साकं कार्याण्यचिन्तयन् ॥ ६५ ॥
कदाचित् पुरुषः प्राप्य मौर्यं सत्वरमूचिवान् ।
मन्त्रार्थं मण्डपे भूपास्त्वां प्रतीक्ष्य स्थिता इति ॥ ६६ ॥
तच्छ्रुत्वा सम्भ्रमान्मौर्यः पूर्ववत्तनयैः समम् ।
सुरुङ्गां प्राविशत् को वा लङ्घयेद् भवितव्यताम् ॥ ६७ ॥
तेषु प्रविष्टमात्रेषु कष्टं पृष्ठे निपातितैः ।
शिलासङ्घैः सुरुङ्गा सा निरुद्धा समदृश्यत ॥ ६८ ॥

किमेतदिति सम्भ्रान्ताः प्रविष्टास्ते गुहोदरम् ।
तत्रापि वध्यचिह्नानि ददृशुर्न तु भूमिपान् ॥ ६९ ॥
भोजनं भाजनशते तेषां प्रत्येकमर्पितम् ।
दीपिकाश्च पृथङ् न्यस्ता वधाचारस्तथा किल ॥ ८० ॥
तद्दृष्ट्वा शोकसन्तप्ता हन्त ते समचिन्तयन् ।
मांसखण्डमयैः पापैः कष्टं भो वञ्चिता वयम् ॥ ७१ ॥
आत्माभ्युदयमात्रे हि सर्वदा वयमुद्यताः ।
न चिन्तिता परज्ञानिस्तेषान्तु मतिरीदृशी ॥ ७२ ॥
मण्डपो मन्त्रयोगोऽयं सम्भ्रान्तः स च पूरुषः ।
सर्वोऽयं दुर्नयस्तेषां कष्टं नास्माभिरोचितः ॥ ७३ ॥
का मतिर्विधि-वैलोम्ये कस्त्यजेद् भवितव्यताम् ।
तद्भूयो धैर्यमालम्ब्य कर्तव्यमिह चिन्त्यताम् ॥ ७४ ॥
इत्युदीर्य क्षणं ध्यायन् पुनरूचे सुरासुतः ।
निरुद्ध-निखिलोपायेऽप्यस्मिन् वत दशान्तरे ॥ ७५ ॥
विधेर्दूरवबोधत्वादाशामात्रं मयोच्यते ।
एतदोदनसङ्घातं दीपमप्येकभाजने ॥ ७६ ॥
संगृह्य धारयत्वेको जीवितं यावदोदनम् ।
यदि निर्गमणोपायो लभ्यतेऽस्य तदन्तरे ॥ ७७ ॥
तदा निर्गत्य विद्वेषि-विध्वंसे यततामसौ ।
इत्येवं कथयित्वास्मिन्मौर्ये धैर्यनिधौ स्थिते ॥ ७८ ॥
द्रष्टुञ्च मरणं स्वानां कर्तुं भूयः प्रतिक्रियाः ।
अक्षमास्तनयाः सर्वे प्रत्यवोचन् न किञ्चन ॥ ७९ ॥
तदा पिता कनीयांसं सुतं साश्रमलोकयत् ।
स चन्द्रगुप्तनामा तु बालको धीरमूचिवान् ॥ ८०

पितुराज्ञामहं तावदुद्वहामि न संशयः ।
जीविष्यामि करिष्यामि निर्गतश्चेत् प्रतिक्रियाम् ॥ ८१ ॥
इत्युक्ते मुदिताः सर्वेऽप्यन्वगच्छन्नमुं शिशुम् ।
सहायविप्रयुक्तोऽपि जेष्यसि त्वं रिपूनिति ॥ ८२ ॥
श्रोदनेन कृताशोऽसौ धृताशो रिपुनाशने ।
उवास वासरैरल्पैः परेऽप्यासन् परासवः ॥ ८३ ॥
श्रुत्वा च तद्वधोदन्तं शुचा राजभयेन च ।
रुरुदुर्निभृतं सर्वे जहृषुः केवलं नृपाः ॥ ८४ ॥
अथ मासत्रयेऽतीते वल्क(ङ्ग)देशनराधिपः ।
प्राहिणोत् पुरुषं कञ्चित् सिंहगर्भञ्च पञ्जरम् ॥ ८५ ॥
पुरुषोऽसौ नृपान्नत्वा सदसीदं न्यवेदयत् ।
अभित्त्वा पञ्जरं सिंहो द्राव्यतां पञ्जराद्बहिः ॥ ८६ ॥
इति श्रुत्वा च दृष्ट्वा च भूपाला मन्त्रिभिर्युताः ।
चिन्तयन्तोऽपि नोपायमपश्यन्मन्दचेतसः ॥ ८७ ॥
तदा तु विशिखो नाम सचिवो मौर्यपक्षगः ।
गूढखेदोवसन्नच समये किञ्चिदब्रवीत् ॥ ८८ ॥
स हि मौर्यसुतश्चन्द्रगुप्तः शिल्पकलानिधिः ।
आमोचयिष्यत् पञ्चास्यं किं तया गतचिन्तया ॥ ८९ ॥
इति श्रुत्वैव भूपालास्तत्परीक्षण-तत्पराः ।
सुरुङ्गां खनयामासुः सभुजङ्गां गुहामिव ॥ ९० ॥
तच्चन्द्रगुप्तमेवात्र दृष्ट्वा शिष्टमवस्थितम् ।
हृष्टास्तेऽधिकृताः प्रोचुर्वत्स ! निर्गम्यतामिति ॥ ९१ ॥
स तु निर्गन्तुकामोऽपि तेषामिर्बन्धदर्शनात् ।
अनिच्छन्निव तानूचे शोकव्याकुलिताच्चरम् ॥ ९२ ॥

पितृभ्रातृ-विहीनस्य प्राणा मम दुरात्मनः।
न गच्छन्ति गलं तन्मे हन्त क्रन्तत क्रन्तत ॥ ९३ ॥
एवमादि वदन्तं तं रुदन्तं भूभुजः स्वयम्।
आगत्य सान्त्वयामासुर्निस्त्रपाः कार्यगौरवात् ॥ ९४ ॥
अयि बालक ! मा रोदीः पितरो वयमेव ते।
किं चिन्तया पुरैवान्तःप्रेमवन्तो वयं त्वयि ॥ ९५ ॥
इत्यादि सान्त्व्यमानोऽपि नासौ निर्गतवान् यदा।
तदा प्रत्यर्पयामासुः पित्र्यं कोषमशेषतः ॥ ९६ ॥
ततः कृच्छ्रेण निर्यान्तं नीतिमन्तममुं नृपाः।
आनयित्वाथ तं सिंहं श्लोकार्धञ्च न्यवेदयन् ॥ ९७ ॥
श्रुत्वा तच्चन्द्रगुप्तोऽपि दृष्ट्वा सिंहञ्च पञ्जरे।
एवं स चिन्तयामास शिल्पशास्त्रविशारदः ॥ ९८ ॥
महाशरीर-सिंहोऽयं नैव पञ्जरजालकैः।
शक्यो मोचयितुं नापि व्याजं पश्यामि पञ्जरे ॥ ९९ ॥
सिंहस्य तु प्रतीयन्ते चेष्टा मन्त्र-कृता इव।
वर्णरोमादिकञ्चापि शिल्पिकल्पितमङ्गतम् ॥ १०० ॥
द्राव्यतामिति वाक्येऽपि धावनं नात्र सम्भवेत्।
तेन द्रावणयोग्योऽयं मधूच्छिष्टमयो भवेत् ॥ १०१ ॥
इति निश्चित-चित्तोऽयमुच्चैरारोप्य पञ्जरम्।
अग्नितप्तैरयोदण्डैः सिंहमद्रावयद्बहिः ॥ १०२ ॥
द्रवीभूतं ततः सिंहं विलोक्य पुरवासिनः।
अमात्या भूमिपालाश्च विस्मयं परमं ययुः ॥ १०३ ॥
वङ्गराजप्रयुक्तोऽसौ पुरुषोऽप्यतिविस्मितः।
प्रशंसन्मौर्यतनयं प्रययौ राजपूजितः ॥ १०४ ॥

अपरः सिंह एवासौ मौर्यनाम्ना समुत्थितः ।
किं किलानेन भावीति शङ्कितोऽभूत् स राक्षसः ॥ १०५ ॥
मौर्यस्य तनयानाञ्च संस्कारानौर्ध्वदैहिकान् ।
विधिवत् कारयामासुश्चन्द्रगुप्तेन पार्थिवाः ॥ १०६ ॥
चन्द्रगुप्तेन साध्यानि नूनमेतादृशानि नः ।
अवशेषोऽपि संरक्ष्यस्तदसौ धीमतां वरः ॥ १०७ ॥
अश्वादिषु नियुक्तोऽसौ तान् कथञ्चिद्विनाशयेत् ।
क्वचिदप्यनियोगे तु पृथग्भाव-मतिर्भवेत् ॥ १०८ ॥
तदग्रभोजने सोऽयं ब्राह्मणानां परिग्रहे ।
कल्प्यतामिति सम्मन्त्र्य तथा चक्रुर्नृपालकाः ॥ १०९ ॥
सोऽपि सपितृसोदर्यविनाशकलुषीकृतः ।
निगूढवैरस्तेजस्वी स्वतेजोभिरदृश्यत ॥ ११० ॥
तथा स्थितोऽपि मतिमानादाय नृपशासनम् ।
अग्रभोजनविप्रेन्द्रकथने तत्परोऽभवत् ॥ १११ ॥

स पुनरथ सहायप्राप्तये जागरूकः
प्रबलमिति च जानन् धीबलं सैन्यवर्यात् ।
भुवि नयबलरूढानन्वयिष्यद् द्विजेन्द्रान्
न खलु बुधजिघृक्षा तस्य शङ्कास्पदं स्यात् ॥ ११२ ॥
सोऽयं पुरोपरिसरे विचरन् कदाचित्
उत्प्रेक्ष्य तेजसमुदैक्षत भूसुरेन्द्रम् ।
मार्गस्थितं कमपि मुञ्जमुदस्य दग्ध्वा
तद्भस्म रोषकपिशेक्षणमापिबन्तम् ॥ ११३ ॥

दृष्ट्वा तं तेजसां राशिं तस्य कर्म च तादृशम् ।
पप्रच्छ चन्द्रगुप्तोऽसौ दूरतः प्रणमन्मुहुः ॥ ११४ ॥

प्रसीद हे महाभाग ! किमिदं कुरुते भवान् ।
इति पृष्टः स विप्रोऽपि साटोपं स्मितमूचिवान् ॥ ११५ ॥
चरतः पादलग्नो मे पतनायाभवद् यतः ।
अतो मुञ्जं समुन्मूल्य दग्ध्वा भस्म पिबाम्यहम् ॥ ११६ ॥
ततोऽसौ पृष्टवान् किं ते धीमन् पीतेन भस्मना ।
विप्रोऽपि प्राह कोपाग्निरन्यथा मां दहेदिति ॥ ११७ ॥
एवं चेदपकुर्वत्सु प्रबलेषु नृपादिषु ।
किं करिष्यसि धीरात्मन् ! कौतुकात् पृच्छ्यते मया ॥११८॥
इति पृष्टो द्विजेन्द्रोऽपि सहासोद्धतमूचिवान् ।
अयि बालक ! नो वेत्सि मामकं मतिवैभवम् ॥ ११९ ॥

अश्वा नागाः स्यन्दनानाञ्च सङ्घाः
मन्त्राः शुद्धा दैवतञ्चानुकूलम् ।
एतान्याहुः साधनानि स्म राज्ञाम्
तेभ्योऽपीयं बुद्धिरुत्कृष्यते मे ॥ १२० ॥

इत्थमाकर्ण्य हृष्टात्मा पादमूले पपात सः ।
को भवानप्रमेयात्मन्ननुगृह्णीष्व मामिति ॥ १२१ ॥
विप्रोऽपि सादरं प्राह सोऽहं नीतिबलोज्ज्वलः ।
विष्णुगुप्तश्च चाणक्यः कौटिल्यश्चास्मि नामतः ॥ १२२ ॥
अधुना पीतनिःशेष-शास्त्राम्भोधिः प्रसन्नधीः ।
नन्दाग्रभोजनं श्रुत्वा भोक्तुमस्मि समागतः ॥ १२३ ॥
तद् ब्रूहि भद्र ! भूपालैर्नियुक्तो विप्रसंग्रहे ।
श्रूयते वृषलः कश्चित् सोऽधुना कुत्र वर्त्तते ? ॥ १२४ ॥
इति पृष्टो वदन् मौर्यः स एव वृषलोऽस्म्यहम् ।
तत् प्रविश्य त्वया धीमन् सनाथीक्रियतां पुरम् ॥१२५॥

भवदागमनान्मन्ये नन्दवंशोऽद्य वर्धितः ।
इत्युक्तः सोऽथ चाणक्यो लज्जामन्यरमब्रवीत् ॥ १२६ ॥
विप्रजातिस्वभावान्मे हन्त चापल्यमागतम् ।
वृषलेति यदा क्षिप्तो राज्ञः पौत्रः स्वयं भवान् ॥ १२७ ॥
तन्मे लज्जापनोदाय वरमिष्टं ददामि ते ।
त्वयि स्निह्यति मे चेतः प्रश्रयेण तवामुना ॥ १२८ ॥
इत्युक्तश्चन्द्रगुप्तोऽपि प्रणम्यैनमवोचत ।
महात्मन् ! वर एवायं वृषलेति त्वयेरितः ॥ १२९ ॥
एवमेवास्मि वक्तव्यो नित्यमेष वरो मम ।
अथवा करुणावेशाद् वरो यद्यपि दीयते ॥ १३० ॥
प्रयाणे मत्कुटीरञ्च पावनीकर्तुमर्हसि ।
एवमुक्ते तथैवेतिवादिनं मोदशालिनम् ।
सम्मानयन् पुरोद्देशं समानयदमुं बुधम् ॥ १३१ ॥
प्रसङ्गात् पितृसोदर्य-प्रणाशादिकमात्मनः ।
उदन्तं कथयन्नेष तदन्तः करुणां व्यधात् ॥ १३२ ॥
स्नपनादि स्वकर्तव्यं सकलं संविधाय सः ।
भुक्ति-शालां प्रदर्श्यास्मै मौर्यः स्वभवनं ययौ ॥ १३३ ॥
गच्छन्नचिन्तयच्चासौ दिष्ट्या लब्धा मनोरथाः ।
सर्वथैनं समालम्ब्य कुर्वेऽहं वैरनिष्क्रियम् ॥ १३४ ॥
अपि नाम बुधेन्द्रोऽयं नृपपाशैर्न पूज्यते ।
चलितास्ते ततो राज्यात् फलिता मन्मनोरथाः ।
इत्यादि चिन्तयन्नेष तस्थौ धन्यः स्वमन्दिरे ॥ १३५ ॥
चाणक्योऽपि समाविश्य भुक्तिशालां व्यलोकयत् ।
स्वर्णभाजनजुष्टानि भुक्त्यर्थं मण्डलान्यसौ ॥ १३६ ॥

प्राङ्मुखानि नवापश्यदेकं प्रत्यङ्मुखं तथा।
राजतैर्भाजनैर्जुष्टं किञ्चिन्न्यूनोपचारकम् ॥ १३७ ॥
मण्डलानां सहस्रञ्च दृष्ट्वा तत्रैव पृष्टवान्।
कोऽत्र भोः ! कथ्यतामेतत् कस्य किं नाम भोजनम् १३८॥
इति धृष्टगिरा पृष्टाः प्रत्यूचुरधिकारिणः ॥ १३९ ॥

स्थानान्यमूनि नवनन्द-नराधिपाना-
मग्रासनं त्वपरमुत्तमविप्रयोग्यम्।
अन्यत् सहस्रमिदमन्यमहीसुराणाम्
तेष्वेकमर्हति भवान् अधुनाधिरोढुम् ॥ १४० ॥

इति श्रुत्वैव चाणक्यो विप्राणामुत्तमोऽस्म्यहम्।
इत्यग्रासनमारुह्य भोक्तुमस्मिन्नुपाविशत् ॥ १४१ ॥
अथ प्रविष्टा राजानो दृष्ट्वाल्पवयसं द्विजम्।
अग्रासनमुपारूढमब्रुवन् कालचोदिताः ॥ १४२ ॥
कोऽसौ वटुरनारूढश्मश्रुरग्रासनं गतः।
निरस्यतां मर्कटोऽयमिति श्रुत्वैवमब्रवीत् ॥ १४३ ॥
मर्कटो वा वराहो वा विद्यते यदि मत्समः।
अहमेवावरोक्ष्यामि किं वोढर्वादघोषणैः ॥ १४४ ॥
सोऽहमस्मि चतुर्वेद-वेदी षड्दर्शने पटुः।
परीक्ष्यश्चेत् परीक्षध्वं नावरोक्ष्यामि साध्वसात् ॥ १४५ ॥
इति रोषं नियम्यैव न्यायवादिनमप्यमुम्।
बलान्निष्क्रामयामासुर्गर्विता नन्दभूभृतः ॥ १४६ ॥

केशे निष्कृष्य स बलान्नरपालभृत्यैः
त्यक्तो बहिर्झटिति मुक्त-शिखोत्तरीयः।

अग्रासने च निहितः स्थविरो द्विजोऽन्यः
चुक्रोध तावदतुलं स हि विष्णुगुप्तः ॥ १४७ ॥

पीतं क्षुधा नाग्नितसुज्वराग्नि-
स्तस्यावमानः कथमेष सह्यः ।
अपाररोष-ज्वलितस्तदानीं
स घोरघोरामकरोत्प्रतिज्ञाम् ॥ १४८ ॥

शृणुत वचनमेतत् क्षत्रियाः क्षुद्रसत्त्वाः !
यदहमखिलमुख्यो न्यक्कृतः पूजितोऽन्यः ।
तदहमखिलनन्दान् पातयित्वाथ राज्यात्
वृषलमपरमत्र न्यस्य बध्नामि चूडाम् ॥ १४९ ॥

इति घोरं प्रतिज्ञाय प्रस्थितेऽस्मिन् बुधेश्वरे ।
धिक् कष्टमिति शोचन्तस्तूष्णीमासन् महाजनाः ॥ १५० ॥
शृणुतेदं क्षुधार्तस्य विप्रस्योन्मादभाषितम् ।
इत्यन्योन्यं हसन्तस्ते भुञ्जते स्म नृपालकाः ॥ १५१ ॥
विष्णुगुप्तोऽपि मौर्यस्य गृहं गत्वा तमूचिवान् ।
नन्दराज्येऽद्य राजा त्वं मन्त्र्यहं चावगम्यताम् ॥ १५२ ॥
इत्युक्ते किमिदं श्रीमान् इति मोदेन पृच्छते ।
राजावज्ञां प्रतिज्ञाञ्च सर्वमस्मै न्यवेदयत् ॥ १५३ ॥
मौर्यः प्रार्थितमेवार्थं श्रुत्वासीत् पूर्णसम्मदः ।
नत्वा शिष्योऽहमस्मीति गुरुत्वेनाहणोन्मुदा ॥ १५४ ॥
स मौर्यं प्रति वक्तव्यं क्षिप्रमुक्त्वा प्रतस्थिवान् ।
न चास्य मौर्ये सौहार्दं संवादं चाविदन् जनाः ॥ १५५ ॥
सोऽयं स्व-भवनं प्राप्य विप्रं स ब्रह्मचारिणम् ।
इन्द्रशर्माणमाहूय स्वावमानं न्यवेदयत् ॥ १५६ ॥

ज्योतिषे मन्त्रवादे च नयि चौशनसे पटुः ।
स विप्रः सर्वकार्याणि सम्मन्त्र्याथ प्रतस्थिवान् ॥ १५७ ॥
नन्दानां चपणायाऽसौ जगाम चपणाकृतिः ।
निष्पृहः किल भोगेषु प्राणधारणकाङ्क्षितं ॥ १५८ ॥
नमस्यर्हन्मुनेः पादौ श्रावकेत्याह्वयन् जनान् ।
पिच्छलाञ्छितहस्ताग्रो नन्दराज्ये चचार सः ॥ १५९ ॥

अथ तु बुधनिरासं तत्प्रतिज्ञाञ्च शृण्वन्
अधिकतरविषादो राक्षसो दीर्घदर्शी ।
ध्रुवमयमभिचारं प्रारभेतेति चक्रे
तदुपशमनचिन्तां नान्यमार्गं विवेद ॥ १६० ॥

सोऽशृणोत् चपणकं कञ्चिच्चरन्तं तान्त्रिकोत्तमम् ।
तमानीय च पप्रच्छ को भवानिति सादरम् ॥ १६१ ॥
गणिते मन्त्रवादे च निपुणः चपणोऽस्म्यहम् ।
जीवसिद्धिरिति ख्यातो निस्पृहश्चेत्युवाच सः ॥ १६२ ॥
ब्राह्मणाः चपणाश्चैव नित्यं वैरसमन्विताः ।
अतो विप्रकृतां बाधामनेन शमयाम्यहम् ॥ १६३ ॥
इति निश्चित्य विश्वासाद्द्विप्रकोप-कथामिमाम् ।
अब्रवीद्राक्षसस्तस्मै सोऽवदच्चिन्तयन्निव ॥ १६४ ॥
अयि श्रावक ! मा भैषीः ब्राह्मणो नाम किं न्विदम् ।
नैषां सैन्यं न दोर्वीर्यं केवलं भीरवो हि ते ॥ १६५ ॥
किन्त्वाभिचारचातुर्यं केषाञ्चिद्विद्यते किल ।
तच्चाहं प्रतिकर्तास्मि तस्य को मत्समो भुवि ॥ १६६ ॥
इति तस्मै प्रतिश्रुत्य राक्षसेन प्रपूजितः ।
निवसञ्जनयामास राज्ञामेष महाज्वरम् ॥ १६७ ॥

चाणक्यस्याभिचारोऽयमिति विश्वास्य लक्षणैः।
तज्ज्वरं शमयामास पिच्छभ्रमणमात्रतः॥ १६८ ॥
ईदृशानि भवन्त्येव ब्राह्मणेभ्य इतीरयन्।
भूमिपैस्त्याजयामास क्षेमदं विप्रभोजनम्॥ १६९ ॥
ततो दिनेष्वतीतेषु राज्ञां सम्मोहदायिनम्।
उन्मादग्रहमुत्पाद्य स्वयञ्चाशीशमत् पुनः॥ १७० ॥
तत् प्रीत्या राजभिर्दत्तं हेम्नां शतसहस्रकम्।
पाषाणवदुपैक्षिष्ट विरक्तः किल सर्वतः॥ १७१ ॥
ततः प्रभृति राजानो राक्षसश्चापि विस्मिताः।
तस्मिन् प्ररूढविश्रम्भा बभुवुर्मन्दचेतसः॥ १७२ ॥
मौर्यस्यास्य पुरोवासे दोषान् पश्यामि लक्षणैः।
इत्युक्त्वा चन्द्रगुप्तं स नगरान्निरवासयत्॥ १७३ ॥
वर्धमानाह्वये ग्रामे नगराद्दशयोजने।
स्थापयामास तं धीमान् तस्य स्वातन्त्र्यसिद्धये॥ १७४ ॥
भूयः शबरनाथस्य वानुमत्या वने द्विजः।
अभिचारं करोतीति लक्षणैरुक्तवानसौ॥ १७५ ॥
भूपालैर्जीविकां हृत्वा स चाकाण्डे प्रकोपितः।
मौर्यस्तु पैतृकैरर्थैर्निगूढं जीवितं ददौ॥ १७६ ॥
एवं मौर्यवशे जातो बलीयान् शबराधिपः।
तथान्येऽपि पितृस्निग्धा गूढं तेन प्रसादिताः॥ १७७ ॥
चाणक्यस्त्विन्द्रशर्माणं विसृज्यानन्तरं ततः।
जगाम पाटलीपुत्रादुदीच्यां शतयोजने॥ १७८ ॥
तत्र पर्वतकं नाम म्लेच्छराजमसेवत।
धीबलैस्तञ्च विश्वास्य कार्यजातान्यवर्णयत्॥ १७९ ॥

नन्दक्ष्मापतिधिक्क्रियाकृतरुषा तन्नन्दराज्यं मया
मौर्याख्याय तदा प्रतिश्रुतमभूदास्ते स निःसाधनः ।
तत् सम्पूर्णबलस्य ते सचिवतां सम्प्राप्य हत्वा नृपान्
दास्यामि स्फुटमर्धराज्यमयि ते मैत्रेण चेद्वर्तसे ॥ १८० ॥
इत्युक्तः पर्वतेन्द्रोऽसौ भ्राता वैरोधकस्तथा ।
पुत्रो मलयकेतुश्च सहामैः समचिन्तयत् ॥ १८१ ॥
नीतिशास्त्रप्रवीणोऽयं चाणक्यो रिपुमर्मवित् ।
तेनार्धं नन्दराजस्य सर्वथा लभ्यमेव नः ॥ १८२ ॥
किञ्च मौर्यस्य तुच्छत्वात् सर्वं वा लभ्यते क्रमात् ।
इति सम्मन्त्र्य मन्त्रित्वे चक्रुश्चाणक्यमादरात् ॥ १८३ ॥
सोऽपि म्लेच्छपतीनन्यान् पर्वतेन्द्रवशेऽकरोत् ।
तत्तत् प्रयोजनं तेभ्यः प्रतिज्ञाय महत्तरम् ॥ १८४ ॥
नन्दराज्याभियानस्य गूहनाय च नीतिमान् ।
दूरगेनान्यभूपेन तस्य वैरमघोषयत् ॥ १८५ ॥
ततः ससुतसोदर्यो राज्ञीकृत्य महाचमूम् ।
दक्षिणो दक्षिणामाशां प्रतस्थे पर्वतेश्वरः ॥ १८६ ॥
स नन्दं प्रति यातीति न ज्ञातं तद्बलैरपि ।
तादृशं तत् कथं विद्युर्दूरगा राक्षसादयः ॥ १८७ ॥
तत्तु चाणक्यचारिभ्यो विजानन् क्षपणेश्वरः ।
नन्दसेनापतीन् प्राप्य रहस्येकैकमूचिवान् ॥ १८८ ॥
आषाढ़कृष्णपक्षादौ भौमवारे रिपुः पुरीम् ।
निरोक्ष्यति तदानीञ्च कालदोषो महांस्तव ॥ १८९ ॥
अतो न तद्दिने योद्धुं प्रस्थातव्यं सखे ! त्वया ।
प्रस्थितश्चेदसन्दिग्धं मृत्युरेव भविष्यति ॥ १९० ॥

त्वत्स्नेहादेष वृत्तान्तो नान्यस्मिन् कथ्यते मया।
वृत्तेऽस्मिन् पूर्वमुद्घुष्टे नोपायः स्यादुदासितुम्॥ १९१॥
इत्येवमेव प्रत्येकं गूढं तेन प्रबोधिताः।
बहवोऽपि च भूपाला युद्धे रुद्धोद्यमाः कृताः॥ १९२॥

अथ पृथुबलशाली चन्द्रगुप्ताधिवासं
निभृततरमयासीत् पर्वतेन्द्रो निशीथे।
स तु चणकसुतोक्त्या पिंचरकोशार्धदायी
व्यतनुत किल मैत्रीं म्लेच्छराजेन मौर्यः॥ १९३॥

प्रत्यूष एव च महापृतनानुयातौ
चाणक्यपर्वतनृपौ सममेकभागे।
मौर्यः किरातपतिसैन्ययुतोऽन्यभागे
रुद्धाखिलाशमथ पुष्पपुरीमरुन्धाम्॥ १९४॥

तावदाशु च भूपालानाह्वयन्ति स्म भूमिपाः।
तेऽपि तैस्तैश्छलोपायैः प्रायेणासन् विलम्बिताः॥ १९५॥

मौर्यस्य दृष्ट्वा ह्यतिवीर्यतया सशङ्कः
तं योद्धुमाप बलवानथ राक्षसोऽसौ।
तत् कालसम्मिलितनातिसमग्रसैन्या
भूपाश्च पर्वतकसैन्यमुखे निरीयुः॥ १९६॥

मौर्यस्तु युद्धसन्नद्धं वीक्ष्य राक्षसमागतम्।
सद्यः समेत्य तत्पादौ ननामैवमुवाच ह॥ १९७॥
राजपुत्रतयास्माकं राज्यांशोऽस्ति कियानपि।
तन्नाय्यं दापयत्वार्यं शमयिष्याम्यहं रणम्॥ १९८॥
इत्युक्ते पाप! युध्यस्व जानामि तव दुर्नयम्।
इत्यूचे राक्षसो रोषात् प्राह पूर्वोक्तमेव सः॥ १९९॥

दीयतां न्याय्यमित्येको युध्यतामिति चापरः ।
इत्थं शुष्कविवादेन तस्थतुस्तौ महारथौ ॥ २०० ॥
तदनु पर्वतनन्दबलौघयोः सुतुमुलो ववृधे समरोत्सवः ।
झटिति खण्डितमुण्डपरम्परा चटचटाकृतिघोषभयङ्करम् ॥२०१॥
तत्क्षणं क्षीयमाणेषु निजसैन्येषु भूमिपाः ।
मानिनो निर्विचाराश्च पर्वतेन्द्रबलेऽपतन् ॥ २०२ ॥
भूपास्ते युद्धसम्बद्धा सद्यश्चाणक्य-शासनात् ।
म्लेच्छवीरैः समं सर्वे खण्डिता रणपण्डितैः ॥ २०३ ॥
नरदेवास्तदानीं ते हन्त पञ्चत्वमागताः ।
भूयोऽपि नरदेवत्वं प्रापुस्त्रिदिवमन्दिरे ॥ २०४ ॥
श्रुत्वा ततः कलकलं युधि राक्षसोऽपि
घोरां विशङ्क्य विपदं रणभूमिमाप ।
दृष्ट्वा च तत्र पतितान्नृपतीनकाण्डे
हा ! कष्टमित्यतिशुचा नगरीं विवेश ॥ २०५ ॥
इत्थं हतेषु नन्देषु राक्षसे खेदकुण्ठिते ।
सर्वार्थसिद्धिना सार्धं नगरान्तर्गते सति ॥ २०६ ॥
चाणक्यसैन्यचक्रेण भूयोऽपि रुरुधे पुरीम् ।
राक्षसो ह्यसमानोऽपि स्वल्पसैन्यो न निर्ययौ ॥ २०७ ॥
चिरं निरोधदीनाश्च पौराश्चाणक्यमूचिरे ।
अराजकं पुरं हा हा भवता रक्ष्यतामिति ॥ २०८ ॥
चाणक्योऽप्यूचिवान् धीरं रिपुरन्तर्गतोऽस्ति नः ।
सर्वार्थसिद्धिनामा स वृद्धो यदिह वर्तते ॥ २०९ ॥
युध्यतां स हि शक्तश्चेन्नोचेद्विशतु काननम् ।
तस्मिन् गते हते वापि पालयाम पुरीमिति ॥ २१० ॥

तत् पौरेभ्यः समाकर्ण्य राक्षसाद्यैर्विचार्य सः ।
पुनरभ्युदयाकांक्षी नृपो यातस्तपोवनम् ॥ २११ ॥
चाणक्यो जयघोषाय पौरान् प्रेरयति स्म सः ।
तेऽपि राक्षससन्त्रस्ताः कथञ्चिच्चक्रिरेऽखिलम् ॥ २१२ ॥
मौर्यपर्वतकौ सोऽथ नवे गेहे न्यवेशयत् ।
न सद्यः पुरमानिन्ये पर्वतं प्रत्यविश्वसन् ॥ २१३ ॥
स पुनश्चिन्तयामास क्षुद्रोऽयं म्लेच्छनायकः ।
द्रुह्येत् कालेन मौर्याय तर्हि वध्यो भवेदसौ ॥ २१४ ॥
राक्षसस्तु न हन्तव्यो दुर्लभा गुणिनो नराः ।
किन्त्वामुष्चन्द्रगुप्तस्य करिष्ये मन्त्रिणं शनैः ॥ २१५ ॥
तत्तु नन्दान्ववायेऽपि यत्र क्वचन जीवति ।
न शक्यमिति सर्वार्थसिद्धिर्वध्यो भवेत् क्रमात् ॥ २१६ ॥
स तु राक्षसमालम्ब्य जिघांसति यदैव नः ।
तदैव तद्वधं कुर्मस्तथाप्येष न शाम्यति ॥ २१७ ॥
भक्तिविक्रमदुर्दान्तः समाश्रित्यापरं नृपम् ।
विरुन्धीतैव भूयोऽपि वयं वारयितास्महे ॥ २१८ ॥
निरुद्ध-सर्वतोर्थस्तु कालात् सन्धास्यते स्वयम् ।
इति निश्चित्य मौर्येन्दो सावधानं स तस्थिवान् ॥ २१९ ॥
राक्षसस्तेन वृद्धेन वर्धयिष्यन् पुनः कुलम् ।
प्राप्य गूढ़ां सुरङ्गां तां मन्त्रयामास बन्धुभिः ॥ २२० ॥
संविचिन्त्य पुनः स्वामिविश्लेषश्लथसैनिकः ।
वञ्चनावधमेवास्य मेने मौर्यस्य वैरवान् ॥ २२१ ॥
गूढ़े तपोवने भूपं गुप्तमादाय राक्षसः ।
मौर्यमासाद्य मन्त्रित्वमर्थयामास दीनवत् ॥ २२२ ॥

नन्दस्य तत्सुतानाञ्च मन्त्राहं तत्कुलोद्भवे ।
त्वय्येव वत्स वत्स्यामि पर्वते नान्यवंशजे ॥ २२३ ॥
इत्येवं प्रार्थितस्त्वेनं बुद्ध्वापि कपटोद्यमम् ।
मौर्यश्चाणक्यविश्वासात् स्वीचक्रे कूटमन्त्रिणम् ॥ २२४ ॥
तथा स्थितो वनस्थस्य क्षितीशस्य मतेन सः ।
बहून् मौर्यवधोपायान् गूढ़माधत्त राक्षसः ॥ २२५ ॥
शिल्पि-हस्तिप-वैद्याद्याः शस्त्रदा गरदा अपि ।
तत्प्रयुक्ताश्चिरं तस्मिन् मौर्ये रन्ध्रं न लेभिरे ॥ २२६ ॥
तदा सर्वार्थसिद्धिस्तु मुनिवेशधरैश्चरैः ।
मौर्याय प्रेषयामास विषाक्तं बदरीफलम् ॥ २२७ ॥
चाणक्यचारास्तज्ज्ञात्वा तेषु सुप्तेषु वर्त्मनि ।
अन्यत् फलं निधायेदं नन्दभोज्येषु चिक्षिपुः ॥ २२८ ॥
मौर्यस्तु मुनिभिर्दत्तं फलं भुक्त्वा सुखं स्थितः ।
सर्वार्थसिद्धिः स्वोत्सृष्टं स्वयं भुक्त्वा मृतोऽभवत् ॥ २२९ ॥
स च तस्य वधोदन्तो बन्धुशैथिल्यशङ्कया ।
गोपितो राक्षसेनापि चिरं भुवि न पप्रथे ॥ २३० ॥
तस्मिन् हते गताशोऽपि राक्षसो रूक्षरोषवान् ।
सर्वथा शत्रुविध्वंसे भूयो बद्धोद्यमोऽभवत् ॥ २३१ ॥
स मौर्यं सेवमानोऽपि गूढ़ं पर्वतकं भजत् ।
तन्मतेन पुनश्चक्रे मौर्यस्यैव वधोद्यमम् ॥ २३२ ॥
अहो पूर्वप्ररूढ़स्य वैरस्य दुरपोहता ।
यद्रिपुत्वे समानेऽपि पर्वतोऽस्य प्रियोऽभवत् ॥ २३३ ॥
कथञ्चिदपि तन्मौर्यं हत्वा राज्यं ददामि ते ।
इति सम्भाव्य पुत्राय पर्वतायाह राक्षसः ॥ २३४ ॥

ततश्च चपणं प्राह हता हि स्वामिनस्तव ।
तद्धन्तृ-निधनोपायो हन्त ! चिन्त्यस्त्वया सखे ॥ २३५ ॥
इत्युक्तोऽसौ तथेत्युक्त्वा तच्चाणक्याय बोधयन् ।
अभिचारक्रियां घोरामारेभे तपसां निधिः ॥ २३६ ॥
हूयमानात्ततो वह्नेरग्निशुद्धेव मैथिली ।
पूर्णचन्द्रमुखी काचिदायताक्षी समुत्थिता ॥ २३७ ॥
अङ्गनानां परिष्वङ्गो मोहनायैव केवलम् ।
अनया तु परिष्वक्तो मृतिमप्युपयास्यति ॥ २३८ ॥
एकस्मिन्निहते चेयमाकस्मिकविलासिनी ।
अदृश्या भवतीत्येवमुपदिश्य ददौ स ताम् ॥ २३९ ॥
राक्षसस्त्वतिगूढं तत् पर्वतेन्द्रेऽपि गोपयन् ।
गते कतिपये काले चाणक्याय न्यवेदयत् ॥ २४० ॥
अस्ति काचन तन्वङ्गी चन्द्रगुप्तोचिता मयि ।
अनया यौवनं तस्य सफलीक्रियतामिति ॥ २४१ ॥
अजानन्निव चाणक्यः प्रशंसन्नुचितज्ञताम् ।
सेयमानीयतां क्षिप्रमित्यानाययति स्म ताम् ॥ २४२ ॥
आनीतां तां मनोज्ञाङ्गीं दृष्ट्वा हर्षाकुले जने ।
शय्यागृह-निवेशस्य समयेऽपि समागते ।
सम्भ्रान्त इव चाणक्यः सदसि प्राह राक्षसम् ।
पर्वतो नः परं मित्रं तस्येयं कल्प्यतामिति ॥ २४३ ॥

स प्राप्तकाले जनतासमक्षम्
तथार्थ्यमानश्चनकात्मजेन ।
तस्योत्तरश्चान्यदवीक्ष्यमाण-
स्तथेति मन्त्रिप्रवरोऽनुमेने ॥ २४४ ॥

पर्वतायैतदाख्यातुं निरुद्धावसरस्तदा ।
राक्षसो दूरतस्तस्थौ स तु शय्यां ददौ मुदा ॥ २४५ ॥
चन्द्रगुप्तं जिघांसुः स पापात्मा पर्वतेश्वरः ।
रात्रौ तया परिष्वक्तो विकृतिम्प्रापदन्तिमाम् ॥ २४६ ॥
अथ राजवधत्रस्तो रजन्यामेव राक्षसः ।
सख्युश्चन्दनदासस्य गृहे गृहजनं न्यधात् ॥ २४७ ॥
चन्द्रगुप्तवधादिष्ट-वैद्यादिपरिपालने ।
चक्रे शकटदासाख्यं कायस्थं धनसञ्चये ॥ २४८ ॥
रात्रावेवाखिलान् भृत्यांस्तत्तत्कार्ये नियम्य सः ।
गूढ़ं पुष्पपुरात्तस्मान्निर्जगाम सुदुर्जयः ॥ २४९ ॥
अन्तःक्षोभकरे तस्मिन् स्थिते राज्यं दुरानमम् ।
इति तन्निर्गमः प्रायश्चाणक्यस्यापि सम्मतः ॥ २५० ॥
हा हेतिवादिनः पौराश्चाणक्याय न्यवेदयन् ।
दर्शितक्रोधशोकोऽथ चाणक्योऽप्यादिशद् भटान् ॥ २५१ ॥
राजघाती दुरात्मा स राक्षसो हन्यतामिति ॥ २५२ ॥
भटैस्तु राक्षसागारं शून्यं दृष्ट्वा निवेदिते ।
राक्षसः पर्वतेन्द्रस्य हन्तेत्यजनि घोषणा ॥ २५३ ॥
यौ पुनः पर्वतेशस्य भ्रातृपुत्त्राववस्थितौ ।
राक्षसेन समं पूर्वंश्चन्द्रगुप्तवधोद्यतौ ।
तौ वधार्हौ विदित्वाऽपि चाणक्यः समचिन्तयत् ॥ २५४ ॥
एको मोचयितव्योऽत्र द्वयोरपि वधे पुनः ।
पर्वतो विहतोऽस्माभिरित्येव प्रत्ययो भवेत् ॥ २५५ ॥
वैरोधकस्त्वतिद्वेषी हन्यतेऽन्यस्तु मुच्यते ।
इति निश्चित्य च प्राह मन्त्रिणं भागुरायणम् ॥ २५६ ॥

त्वं हि प्रागेव मौर्येषु स्नेहवान् मयि चाधुना ।
पर्वतेन्द्रादिभिः प्राप्तो गूढमैत्रीं मदाज्ञया ॥ २५७ ॥
स त्वं मलयकेतुं तं बोधयन् मत्कृतं भयम् ।
अपवाहय तस्यैवं हिताख्यानात् प्रियो भव ॥ २५८ ॥
इत्युक्तः सोऽपि गत्वा तमशक्तः क्षीणमब्रवीत् ।
कष्टं मलयकेतो ते चाणक्येन हतः पिता ॥ २५९ ॥
तस्मा घोषय रोषेण त्वामप्येष हनिष्यति ।
ततोऽद्य स्वपुरं प्राप्य कर्तव्यं चिन्त्यतां पुनः ॥ २६० ॥
इत्युक्तास्त्वकृतप्रेत-कृत्यो म्लेच्छसुतो ययौ ।
अयं मदनुमत्यैव गतः पर्वतकात्मजः ।
काले चायास्यतीत्येव कौटिल्यस्य तदा वचः ॥ २६१ ॥
तदा पर्वतहन्तारं ये चाणक्यं शशंसिरे ।
त इत्थं मन्त्रयामासुरलं नः क्षुद्रशङ्कया ॥ २६२ ॥
पर्वतो न हतोऽनेन स चेदद्य कथं पुनः ।
अनुशेषतया वध्यं तत्पुत्रं मोचयेदिति ॥ २६३ ॥
राक्षसस्तु पुरात्तस्मान्निर्गत्य शतयोजने ।
छन्न एवावसन्मौर्यवधोपायं विचिन्तयन् ॥ २६४ ॥
ततो मलयकेतुं तमपक्रान्तं निशम्य सः ।
सोऽहं मौर्यपशुं हत्वा कृत्स्नं राज्यं ददामि ते ।
व्यूह्यन्तां सैन्यचक्राणि शत्रुभेदं करोम्यहम् ॥ २६५ ॥
इत्येवं राक्षसेनोक्तो गर्वितः पर्वतात्मजः ।
तस्मै मन्त्रिपदं दत्त्वा प्रतिजज्ञे किल स्वयम् ॥ २६६ ॥
अहत्वा पितृहन्तारं न दास्यामि जलाञ्जलिम् ।
इति स्वेच्छावशे स्थातुं म्लेच्छानप्यादिदेश सः ॥ २६७ ॥

राक्षसस्त्वरिभेदाय कृत्वा पुष्पपुरे चरान् ।
रञ्जयन् म्लेच्छसैन्यानि तस्थौ रन्ध्रेच्छया चिरम् ॥ २६८ ॥
कौटिल्यस्तु चरैर्दृष्ट्वा म्लेच्छराक्षससङ्गमम् ।
असम्भ्रान्तश्चरान् चक्रे स्वपक्ष-परपक्षयोः ॥ २६९ ॥
स कदाचित्तु मौर्यस्य पुरप्राप्तिमघोषयत् ।
पुरसंस्करणादिष्टाः शिल्पिनस्तमवेदयन् ॥ २७० ॥
तोरणाद्यैर्बहिर्द्वारं संस्कृतं दारुवर्मणा ।
वयञ्चाभ्यन्तरं कुर्म इति श्रुत्वैव सोऽस्मरत् ॥ २७१ ॥
अनादिष्टकृतं नूनं तोरणं मारणायनम् ।
शिल्पी च राक्षसस्येष्टो तत् कुर्यामहमन्यथा ॥ २७२ ॥
इति निश्चित्य सम्प्राप्ते मुहूर्तमानयन्निव ।
वैरोधकाय राज्यार्धं दत्त्वा प्रावेशयत् पुरम् ॥ २७३ ॥
कञ्चुकाकल्पसंच्छिन्नं मौर्यस्यैव च हस्तिनम् ।
आरूढं निशि यान्तं तं मौर्यमेवाविदन् जनाः ॥ २७४ ॥
गोपुरान्तर्विशन्तं तं स्वल्पसैन्यं स्वहस्तिपः ।
राक्षसाज्ञाकरो मौर्यबुद्ध्या हन्तुं प्रचक्रमे ॥ २७५ ॥
तदैव दारुवर्मापि मुमुचे यन्त्रतोरणम् ।
भ्रष्टलक्षं पतन् सोऽपि हस्तिपं तमचूर्णयत् ॥ २७६ ॥
विफलश्रम एष दारुवर्माप्यतिमानी करगामिणायुधेन ।
करिणोगतमित्य भूपतिं तं न्यवधीदाशु हतश्च तत्पुरोगैः ॥२७७॥
अथाजहार मौर्याय वैद्यः स विषमौषधम् ।
तद् बुद्ध्वा पाययामास तमेव चणकात्मजः ॥ २७८ ॥
शयनाधिकृतश्चान्यो राक्षसाप्तमहाधनः ।
अपूर्वंवधदृष्ट्यैव पृष्ट्वा जातहतोऽभवत् ॥ २७९ ॥

प्रयितस्य वधार्थञ्च गृहगर्भे स्थिताश्चराः ।
विज्ञाय स्वगृहं दग्धं चाणक्यः केन वञ्च्यते ॥ २८० ॥
इत्थं स वृषलं रक्षन्नक्षीणोपायसागरः ।
अञ्जसा रञ्जयामास नन्दराज्यं किल क्रमात् ॥ २८१ ॥
प्रधानानाञ्च केषाञ्चित् कार्याण्युत्पाद्य कैतवात् ।
कारयित्वाधिकं राज्यं चक्रेऽसौ स्थिरसौहृदम् ॥ २८२ ॥
ततः प्रधानपुरुषान्मन्त्रिणोऽपि महत्तरान् ।
मौर्याद्भेत्तुमचेष्टन्त केचिद्राक्षसपक्षगाः ॥ २८३ ॥
तज्जानन् विष्णुगुप्तोऽपि म्लेच्छाद्राक्षसभेदने ।
बोधिताशेषकर्तव्यं भागुरायणमब्रवीत् ॥ २८४ ॥
अन्ये भद्रभटाद्याश्च प्रधानपुरुषास्तदा ।
बोधिताशेषकर्तव्या वैरव्याजाद्विनिर्गताः ॥ २८५ ॥
एवं राक्षससम्भेदनोन्मुखे चणकात्मजे ।
चरो निपुणको नाम समेत्य तमवेदयत् ॥ २८६ ॥
श्रेष्ठी चन्दनदासाख्यः कायस्थः शकटाभिधः ।
क्षपणो जीवसिद्धिश्च त्रयो नः परिपन्थिनः ॥ २८७ ॥
तत्र चन्दनदासोऽसौ राक्षसस्य कुटुम्बकम् ।
रक्षतीति ततो लब्धमुद्रामस्मै दिदेश सः ॥ २८८ ॥
मुद्रां राक्षसनामाङ्कां तत्कान्ताकरनिःसृताम् ।
लब्ध्वा मेने स चाणक्यः शत्रुमेवाङ्गुलीगतम् ॥ २८९ ॥
अथैतद्राक्षसस्यैव विक्रेतव्यमिति ब्रुवन् ।
द्विजेभ्योऽदापयद्राजा पर्वतेन्द्रस्य भूषणम् ॥ २९० ॥
पुरा शकटदासस्य मित्रीकृतमथाब्रवीत् ।
कृत्स्नं त्वयैव साध्यं नस्तत्रादावेभिरक्षरैः ॥ २९१ ॥

लेखमव्यक्तवृत्तान्तं शकटेनाभिलेखय ।
मुद्रया मुद्रितं लेखं मुद्राञ्चैनां वहन् पुनः ॥ २९२ ॥
शकटं हन्तुमानीतं उन्मुच्योपेहि राक्षसम् ।
तस्माल्लब्ध्वा सुहृत्त्राणप्रीणितात् पारितोषिकम् ।
मुद्राञ्च दत्त्वा सेवस्व राक्षसं शकटान्वितः ॥ २९३ ॥
युद्धोद्यमे पुनर्मार्गे लेखं म्लेच्छाय दर्शयन् ।
निर्बन्धं वाचिकञ्चैव मुक्त्वा त्याजय राक्षसम् ॥ २९४ ॥
इति तस्मिन् विसृष्टे तु नग्नं राक्षस-भेदने ।
गूढमादिश्य तद्दोषं घोषयन्निरवारयत् ॥ २९५ ॥
ततः शकटदासस्य शूलारोहणमादिशत् ।
नीतः सिद्धार्थकेनासौ बाह्यान् विद्राव्य घातकान् ॥ २९६ ॥
तावच्चन्दनदासाख्यमाहूय श्रेष्ठिपुङ्गवम् ।
बहुधा चोदयामास दातुं गृहजनं रिपोः ॥ २९७ ॥
तं बुद्ध्वा दृढसौहार्दोन्नूनमेतद्विमुक्तये ।
राक्षसोऽभ्युपगन्तेति निबबन्ध रुषेव तम् ॥ २९८ ॥
तावद्भद्रभटादीनां प्रवासादाकुले जने ।
अजानन्निव चाणक्यः सर्वानाश्वासयन् स्थितः ॥ २९९ ॥
स भागुरायणस्तावत् प्राप्य तं पर्वतात्मजम् ।
आसीदाभ्यन्तरो मन्त्री कौटिल्याज्ञां प्रसाधयन् ॥ ३०० ॥
तदुक्त्या राजपुत्त्रेण राक्षसोऽसौ विषादवान् ।
अनादृतविभूषोऽपि भूषितोऽभूत् स्वभूषणैः ॥ ३०१ ॥
तदा विरोधगुप्ताख्यः प्रणिधिः प्राप्य राक्षसम् ।
आदितो वेदयाञ्चक्रे तस्मै पौष्पपुरीं कथाम् ॥ ३०२ ॥
स बन्धनां वधं बन्धं श्रेष्ठिनो निजकारणात् ।

निधनं शकटस्यापि श्रुत्वा खेदाकुलोऽभवत् ॥ ३०३ ॥
तदा शकटदासेन समं सिद्धार्थको गतः ।
सम्प्रीताद्राक्षसाल्लेभे भूषणं पारितोषिकम् ॥ ३०४ ॥
मुद्रायां तेन दत्तायां तयैवाजनि मुद्रणा ।
शकटो लेखकोऽप्यासीत् सिद्धार्थोऽपि च सेवकः ॥ ३०५ ॥
ततस्तेनैव चारेण वृत्तशेषे निवेदिते ।
भेदं भद्रभटादीनामाकर्ण्य मुमुदेतराम् ।
चाणक्यमौर्ययोश्चापि श्रुत्वा वैराङ्कुरं पुनः ।
मोदाद्वैतालिकं कञ्चिदादिशद्वैरवृद्धये ॥ ३०७ ॥
ततो विक्रेतुमानीतं भूसुरैर्भूषणत्रयम् ।
दृष्ट्वा शकटदासोऽयं राक्षसाय न्यवेदयत् ॥ ३०८ ॥
सोऽपि सिद्धार्थकायाश्च दत्तप्राग्धृतभूषणम् ।
तत्पदे धर्तुमक्रीणात् अलङ्कारानमून् मुदा ॥ ३०९ ॥
चाणक्योऽपि च मौर्येण व्याजवैरमथाकरोत् ।
राक्षसस्तेन विस्रब्धः सैन्यैर्युद्धाय सम्पतेत् ॥ ३१० ॥
ततः पुष्पपुरासन्नप्रासान् भित्त्वा मिथो रिपून् ।
सैन्यमप्याहरिष्यामीत्येवं निश्चितमानसः ॥ ३११ ॥
मौर्यः पुष्पपुरे तावदारेभे चन्द्रिकोत्सवम् ।
चाणक्यो वारयाञ्चक्रे वैरमासीदतस्तयोः ॥ ३१२ ॥
चाणक्योपेक्षया जातो बहूनां निर्गमः पुरात् ।
इत्याद्यकथयद्दोषं मौर्योऽसौ राक्षसं स्तुवन् ॥ ३१३ ॥
तथा वैतालिकेनासौ कोपस्योद्दीपनैः स्तवैः ।
स्तुतो रुष्यन्निवात्यन्तं साचिव्यादत्यजद् गुरुम् ॥ ३१४ ॥
राक्षसस्तु रिपोर्वैरात् प्रासान् भद्रभटादिकान् ।

क्षपणश्चायतं दृष्ट्वा मोदमानः स्थितस्तदा ॥ ३१५ ॥
पुनश्चाणक्यसन्त्यागं चरात् करभकाभिधात् ।
शृण्वन्नतिप्रसन्नोऽभूत् सिद्धं मत्वा निजं नयम् ॥ ३१६ ॥
किन्तु भद्रभटाद्या ये सेवन्ते स्म नृपात्मजम् ।
तैर्वाचि सूचिता किञ्चिद्राक्षसस्यारिपक्षता ॥ ३१७ ॥
तां शङ्कामेधयाञ्चक्रे चारराक्षससत्कथाम् ।
गूढं संश्राव्य तात्पर्यं कलयन् भागुरायणः ॥ ३१८ ॥

चरो हि मौर्यः खलु राक्षसं स्तुवन्
निरास चाणक्यमिति प्रभाषते ।
प्रमोदते तेन च राक्षसोऽधिकं
किमेतदित्याह स भागुरायणः ॥ ३१९ ॥

तामजानन् प्रभोः शङ्कां रिपुव्यसनदर्शनात् ।
राक्षसो मुदितश्चक्रे भीषणं समरोद्यमम् ॥ ३२० ॥
निगूह्य शङ्कां भूपोऽपि राक्षसः शक्तिमानिति ।
तदधीनमहासैन्यो ययौ पुष्पपुरं प्रति ॥ ३२१ ॥
प्राप्ते पुष्पपुरासन्ने बभाषे भागुरायणः ।
मन्मुद्रालाञ्छिता एते निर्यान्तु प्रविशन्तु वा ॥ ३२२ ॥
को नु जानाति कौटिल्यं प्रकृत्या कुटिलाशयम् ।
अन्योऽन्ये चाप्यविज्ञाताश्चारास्तस्य चरन्ति हि ॥ ३२३ ॥
ततः स जीवसिद्धिस्तु राक्षसे रोषवानिव ।
स्थित्वा गन्तुमना मुद्रां ययाचे भागुरायणम् ॥ ३२४ ॥
स च तत्र प्रसङ्गेन राक्षसं पितृघातिनम् ।
म्लेच्छपुत्राय विश्वास्य लब्धमुद्रश्च निर्ययौ ॥ ३२५ ॥
ततश्च राक्षसाल्लब्धां भूषां राजसुतार्पिताम् ।

तां पत्रिकाञ्च सिद्धार्थो हृत्वा मुद्रां विनिर्ययौ ॥ ३२६ ॥
गृहीतस्ताडितः सोऽथ दर्शयामास भूषणम् ।
मौर्यराक्षस-सन्धानद्योतिकामपि पत्रिकाम् ॥ ३२७ ॥
पृष्टश्चासौ नृपं प्राह त्वां निहत्यैष राक्षसः ।
म्लेच्छेन्द्रैः पञ्चभिः सार्धं मौर्यमेवाश्रयेदिति ॥ ३२८ ॥
ततो राक्षसमाहूय तस्मिन् स्वपितृभूषणम् ।
...क्रीतमालोक्य चुक्रोधातितरां नृपः ॥ ३२९ ॥

शकटालिखितं ततः समुद्रं
कूटपत्रं प्रसमीक्ष्य राक्षसोऽपि ।
शकटेऽपि सशङ्कतां गतोऽसा-
वुपपन्नैकपटे निरुत्तरोऽभूत् ॥ ३३० ॥

ततो रुष्टेन भूपेन सन्त्यक्तः शकटाद्बहिः ।
खड्गमात्रसहायोऽसौ लज्जितो राक्षसो ययौ ॥ ३३१ ॥
ततोऽसौ कुत्र यातीति ज्ञातुमुन्दुरकाभिधः ।
चाणक्यचारो गच्छन्तं राक्षसं गूढमन्वगात् ॥ ३३२ ॥
सिद्धार्थकोऽपि सिद्धार्थो गत्वा पुष्पपुरं ततः ।
मौर्यायावेद्य वृत्तान्तं लेभे मानं महत्तरम् ॥ ३३३ ॥
ततो मलयकेतुश्च मोहितः सैन्यनायकान् ।
पञ्च तान् पञ्चतां निन्ये तेनाभूत् श्लथसैनिकः ॥ ३३४ ॥
त्यक्तं मन्त्रिपदं तदैव समुपारूढो महासैन्यवान्
चाणक्यो ददृशेऽथ शात्रवबले खेदात् प्रयाणोन्मुखे ।
तत्राक्रम्य निजैर्बलैः परचमूं कृत्स्नां रथाश्वद्विपं
द्रागाहृत्य विघुष्टजैत्रपटहः सद्यः पुरीमाविशत् ॥ ३३५ ॥
गृह्यमाणे च सैन्यौघे निःसहायं नृपात्मजम् ।

बलाद् भद्रभटाद्यास्ते बबन्धुः पार्श्ववर्तिनः ॥ ३३६ ॥
राक्षसो मर्तुकामोऽपि श्रेष्ठिस्नेहात् पुरं व्रजन् ।
तद्वृत्तान्तावबोधाय जीर्णोद्यानं गतः स्थितः ॥ ३३७ ॥
एतदुन्दुरकाच्छ्रुत्वा चाणक्यः श्रेष्ठिहिंसने ।
श्वपाकवेशं सिद्धार्थं तथान्यञ्च समादिशत् ॥ ३३८ ॥
चारोऽन्यः श्रेष्ठिसौहार्दव्याजात्तद्वधदुःखितः ।
जीर्णोद्यानं गतो मर्तुं तञ्च पप्रच्छ राक्षसः ॥ ३३९ ॥
तस्माच्चन्दनदासस्य वधारम्भं निशम्य सः ।
खड्गेन घातकान् हत्वा मोचयिष्यन् प्रतस्थिवान् ॥ ३४० ॥

चरस्तमूचे ननु सायुधस्य ते
गतिर्वृतानिष्टफला च सम्भवेत् ।
धृतायुधं कञ्चन वीक्ष्य दूरतो
वध्यं निहन्युर्द्रुतमेव घातकाः ॥ ३४१ ॥

इत्युक्तो मुक्तशस्त्रोऽसौ दातुकामो निजां तनुम् ।
सद्यो वध्यभुवं प्राप्य घातकानेवमब्रवीत् ॥ ३४२ ॥
अहमेवास्मि हन्तव्यः साधुरेषः समुच्यताम् ।
मुख्यलाभे पुनः कस्मात् प्रतिनिध्युपसंग्रहः ॥ ३४३ ॥
इत्युक्तः श्वपचः प्राप्तचाणक्याय न्यवेदयत् ।
सोऽपि राक्षसमासाद्य सादरं प्रणनाम तम् ॥ ३४४ ॥
भो क्षमस्व समस्तोऽयं व्याजस्त्वत्सन्धिकाम्यया ।
कृतोऽस्माभिर्न तु द्वेषादित्यूचे चणकात्मजः ॥ ३४५ ॥
सादरं चन्द्रगुप्तोऽपि प्राप्य तं कुलमन्त्रिणम् ।
नत्वा सविनयं तस्थौ चाणक्यः पुनरूचिवान् ॥ ३४६ ॥
अयि ! चन्दनदासस्य जीवितं यदि काङ्क्षते ।

तर्हि मन्त्रिपदं याहि हनिष्याम्यमुमन्यथा ॥ ३४७ ॥
इत्युक्तः सोऽनुमत्यैव शङ्कमानः सुहृद्वधम् ।
अनिच्छन्नपि साचिव्यं जगृहे राक्षसः स्वयम् ॥ ३४८ ॥
तावद् भद्रभटादिकैरुपहृतं दृष्ट्वा च बद्धं रिपुं
पृष्ट्वा राक्षसमेषु तस्य वचसा तस्मै ददौ स्थानसून् ।
किञ्चान्यं निजराज्यमस्य नृपतिः सम्मानमुच्चैर्ददौ
प्रीत्याहूय तदैव सर्वनगरश्रेष्ठं ददौ श्रेष्ठिने ॥ ३४९ ॥
तद्वच्चान्ये कुसुमपुरजा राक्षसस्य प्रिया ये
चाणक्यस्तानभिमतशतैः प्रीणयामास राज्ञा ।
आसीदन्यादृशमिव तदा राक्षसस्यापि चेतः
सम्मानैश्च क्षितिपतिगुणैः प्रेम चासीत् क्रमेण ॥ ३५० ॥
प्रतिज्ञां तीर्त्वैवं विपुलमतिराबध्य च शिखां
निराशोऽपि प्रीत्या नरपतिकृताशेषविभवः ।
स कौटिल्यो धर्मान् विधिवदकरोदात्मभवने
वदन् काले काले हितमखिलमस्मै नरभुजे ॥ ३५१ ॥
स चन्द्रगुप्तोऽपि विधाय भाग्यवान्
योग्यां पितृ-भ्रातृ-वधप्रतिक्रियाम् ।
गुणोत्तरं राक्षसमाप्य मन्त्रिणम्
ररक्ष वयस्यन्त्वशेषन्महीं सुखम् ॥ ३५२ ॥
इति रत्निनतक-विरचिता चाणक्यकथा समाप्ता ।

---

# চাণক্য-কথা

১। যিনি স্বভাবপূজিত মূর্ত্তির দ্বারা জ্ঞানিগণের আনন্দবর্দ্ধন করেন, যিনি বেদবাক্যের দ্বারা প্রতিপাদিত হইয়া থাকেন, সেই শ্রীমান্ নারায়ণ জয়যুক্ত হউন।

২। যে বুদ্ধিবলে ভূদেব চাণক্য কি কার্য্যই না সাধন করিয়াছেন সেই পুরুষদিগের সর্ব্বার্থ-সাধিনী বুদ্ধি জয়যুক্ত হউক।

৩। চাণক্যের সেই ইতিবৃত্ত (অদ্যাবধি) গদ্যরূপে বিদ্যমান রহিয়াছে। সম্প্রতি রবিনর্ত্তক তাহা পদ্যাকারে পরিণত করিতে উদ্যত হইয়াছেন।

৪। প্রচণ্ডনীতি-নৈপুণ্য-সূচক এবং অদ্ভুত বীরত্বপূর্ণ এই চাণক্য-কথার দ্বারা কোন্ বুদ্ধিমান্ ব্যক্তি অতিশয় আনন্দিত না হন?

৫। প্রতিষ্ঠিত ভূপালগণ-শোভিত এবং রত্নকিরণের পাটলরাগ-রঞ্জিত পাটলিপুত্র নামক রাজধানী গঙ্গাতীরে অবস্থিত আছে।

৬। সেই নগর বহুজাতির দ্বারা পরিপূর্ণ; তথায় কাহারও শোকের লেশ মাত্র নাই। জনসকল তাহাকে পবিত্র এবং তিলকের ন্যায় পৃথিবীর শীর্ষস্থানীয় বলিয়া বর্ণন করিয়া থাকেন।

৭। সর্ব্বার্থসিদ্ধি (যাঁহার অপর নাম নন্দ) নামক নরপতি তথায় রাজত্ব করিতেছিলেন। রাক্ষস নামক তাঁহার একটি রূক্ষস্বভাব মন্ত্রী ছিলেন।

৮। সেই রাক্ষস সত্য সত্যই লঙ্কায় উপনিবেশ স্থাপন না করিয়াও রামচন্দ্রাদির (ন্যায় গুণিগণের) প্রতি বিরূপ ছিলেন এবং নীতিকুশল ব্যক্তিদিগকে ভালবাসিতেন।

৯। অনন্তর সেই নন্দভূপতি সুনন্দানাম্নী একটী রাজকন্যাকে

এবং মূর্ত্তিমান্ কন্দর্পাস্ত্রের ন্যায় দীপ্তিমতী মুরানাম্নী অপর একটি শূদ্রপত্নীকে লাভ করিয়াছিলেন।

১০। রাজা নন্দ দুই পত্নী লইয়া আনন্দে ছিলেন; কিন্তু সন্তানলাভ না হওয়ায় অন্তরে উদ্বিগ্ন হইয়া উঠিলেন।

১১। তৎকালে জনৈক তপস্বী পাটলিপুত্রে আগমন করিলে রাজা নন্দ তাঁহাকে সম্মান করিয়া স্বীয় পুরে আনয়নপূর্ব্বক পাদ্য ও অর্ঘ্যের দ্বারা পূজা করিয়াছিলেন।

১২। সেই তপস্বীর পবিত্র পাদপ্রক্ষালনোদক রাজা মহিষীদ্বয়ের মস্তকে সিঞ্চন করিলে তাহা হইতে মুরা এক বিন্দু ও অপর মহিষী নয় বিন্দু পাইয়াছিলেন।

১৩। সেই জল মুরা প্রীতি ও ভক্তি সহকারে এবং অতিমানিনী সুনন্দা অবহেলায় গ্রহণ করিয়াছিলেন।

১৪। তপস্বী ( জলবিন্দু সিঞ্চন কালে ) উভয়ের অবস্থা দেখিয়া মুরার প্রতি অতিশয় প্রসন্ন হইলেন এবং কার্য্য সম্পন্ন হইলে মহারাজের নিকট বিদায় লইলেন।

১৫। তদনন্তর অবিলম্বে ভাগ্যবতী মুরা গর্ভধারণ করিয়া যথাকালে প্রভাবান্বিত মৌর্য্যনামক সুন্দর তনয় প্রসব করিলেন।

১৬। কিয়দ্দিন পরে কুমার উপযুক্ত বয়ঃপ্রাপ্ত হইলে মহারাজ বিনয়বিভূষিত কুমারকে বেদ ব্যতিরেকে অপরাপর শাস্ত্র ও অস্ত্র পরিচালনে আচার্য্য কর্ত্তৃক শিক্ষিত করাইয়াছিলেন।

১৭। মহারাজ এই কুমারের প্রতি সন্তুষ্ট ছিলেন, এবং কুমারও তাঁহার আজ্ঞাধীন ছিলেন। এইরূপে মৌর্য্য জননীদ্বয়ের ও প্রজাবর্গের আনন্দ বৃদ্ধি করিয়াছিলেন।

১৮। অনন্তর মহিষী সুনন্দা তাঁহার চিরবাঞ্ছিত গর্ভধারণ করিলেন এবং মহারাজাও আনন্দ সহকারে ক্রমে ক্রমে তাঁহার গর্ভাধানাদি সংস্কার অনুষ্ঠান করাইলেন।

১৯। তাহার পর দশ মাসে মহিষী সুনন্দা এক মাংসপিণ্ড প্রসব করিলে, সেই প্রসূত মাংসপিণ্ড দেখিয়া মহারাজ, মন্ত্রী, ও অন্তঃপুরবাসিগণ অতিশয় খেদযুক্ত হন।

২০। এই সময় মহারাজের প্রতি দৈববাণী হইল,—'মহারাজ! বিষাদগ্রস্ত হইও না—ইহা হইতে তোমার নয়টি পুত্র উৎপন্ন হইবে'।

২১। এইরূপ আকাশবাণী শ্রবণের পরও মহারাজকে শোক-ব্যাকুল দেখিয়া সুধী মন্ত্রী রাক্ষস চিন্তাপূর্ব্বক গান্ধারীর বৃত্তান্ত স্মরণ করিলেন।

২২। রাক্ষস সেই মাংসপিণ্ডকে নয় ভাগে বিভক্ত করিয়া তৈলপূর্ণভাণ্ডে রাখিলেন।

২৩। তৎপরে যথাকালে একসঙ্গে উক্ত নয়ভাগে বিভক্ত মাংসপিণ্ড হইতে নয়টী কুমার জন্মগ্রহণ করিলে মহারাজ অতিশয় হৃষ্ট হইয়া নবজাত কুমারগণের জাতকর্ম্মাদিকার্য্য সম্পন্ন করিলেন।

২৪। যথাকালে রাজকুমারগণ ধনুর্ব্বেদ, নীতি প্রভৃতিতে সুশিক্ষিত হইয়াছিলেন এবং যৌবন প্রাপ্ত হইলে, রাজা তাঁহাদিগকে আহ্বান করিয়া আনয়নপূর্ব্বক মন্ত্রিগণের সহিত মন্ত্রণা করিলেন।

২৫। এই নয়টি পুত্রের মধ্যে আমি কোনটীকেও প্রবীণ দেখিতেছি না, যাহার উপর রাজ্যভার ন্যস্ত করিয়া আমি সুখে বিশ্রাম করিতে পারিব।

২৬। আপনারা বলুন এ বিষয়ে কর্ত্তব্য কি? আপনাদিগের দৃষ্টিদ্বারাই আমি দর্শন করিয়া থাকি। মুরাপুত্রকে সেনাপতিত্বে বরণ করিব এইরূপ স্থির করিয়াছি।

২৭। রাজবাক্য শ্রবণ করিয়া মৌর্য্য চিন্তা করিলেন, আমি জ্যেষ্ঠ, পিতা স্নেহশূন্য হইয়া কিজন্য আমাকে সৈনাপত্যরূপ ছলগর্ভ দাস্যকর্ম্মে নিয়োগ করিতেছেন।

২৮। এই নরপতি আমাকে রাজ্যাংশমাত্রও প্রদান করিতে

